एवं जोगुवओगा लेसाई भेयओ बहुभेया । जा जस्स जंमि उ गुणे संखा सा तंमि गुणगारो ॥ ११७ ॥

व्याख्या—एवमनन्तरोक्तोदयानामुदयपदानां च योगोपयोगादिभेदतो बहवो भेदा भवन्ति । तदानयनमयोगमाह–यां सङ्ख्या योगोपयोगलेश्यानां यस्मिन् गुणे सा सङ्ख्या तस्मिन् गुणे गुणकारो भवति, तुशब्दो वाशब्दार्थे उदयविवक्षायां पदविवक्षायां चेति ( गाथार्थः ) ॥ ११७ ॥

योगान् बहु बहु वक्तव्यत्वात् तावद्विहाय उपयोगानाह " [1]मिच्छाइ अप्पमत्तंतयाण " इत्यादि मतिगुणं चतुर्विंशतयः स्थाप्यन्ते ।८।४।४।८।८।८।८।४। " [2]अचक्खुदंसण " इत्याद्युपयोगैर्गुणिताः ।४०।२०।२०।४८।४८।५६।५६।२८। एकत्र पिण्डिताः त्रीणि शतानि षोडशोत्तराणि ।३१६। एतान्यपि चतुर्विंशतिभिरुदयैर्गुणितानि चतुरशीतानि पञ्चसप्ततिशतानि भवन्ति ।७५८४। द्वादश द्विकोदयाश्चत्वार एकोदया एकोऽवन्धकोदयः सप्तदशैव तेऽपि सप्तोपयोगगुणा एकोनविंशत्यधिकं शतम्, अनयोरैक्ये सप्तसप्ततिशतानि त्र्यधिकान्युदयानां भवन्ति, ।७७०३। पदसङ्ख्यामाह–" [3] अट्ठीवचीसा " इत्यादिगुणपदध्रुवकस्थापना ।६८। ३२।३२।६०।५२।४४।४४।२०। स्वोपयोगगुणा ।३४०।१६०।१६०।३६०।३१२।३०८।३०८।१४०। एकीकृतानि विंशतिशतान्यष्टाशीतानि भवन्ति, ।२०८८। तान्यपि चतुर्विंशतिगुणितानि पञ्चाशत्सहस्राणि द्वादशोत्तरशताभ्यधिकानि भवन्ति, ।५० ११२। बादरसूक्ष्मोदयपदान्येकोनत्रिंशत्तान्यपि सप्तोपयोगगुणानि त्र्युत्तरं शतद्वयं भवति, अनयोर्योगे पदसङ्ख्या पञ्चाशत्सहस्राणि शतत्रयं पञ्चदशोत्तरं चेति ।५०३१५। एतामेव सङ्ख्यां सूत्रेणाह—

१ गाथा ३१ । २ प्रथमद्वारगाथा १९ । ३ गाथा ११६ ।

उदयाणुवओगेसुं सगसयरिसया तिउत्तरा होंति। पण्णासपयसहस्सा तिण्ण सया चेव पण्णरसा ॥ ११८॥

व्याख्या—उदयानामुपयोगेषु सप्तसप्ततिशतानि त्र्युत्तराणि भवन्ति, ।७७०३। पञ्चाशत्पदसहस्राणि त्रीणि शतानि पञ्चदशोत्तराण्येव ।५०३१५। इति गाथार्थः ॥ ११८ ॥

एवं भूयोऽपि मिथ्यादृष्ट्याद्यानां चतुर्विंशतयः ।८।४।४।८।८।८।८।४। स्वलेश्यागुणाः ।४८।२४।२४।४८।२४।२४।२४।४। सप्तसङ्ख्यासंयोगः शतद्वयं विंशत्यधिकं ।२२०। चतुर्विंशतिगुणं द्वापञ्चाशच्छतान्यशीतानि भवन्ति, ।५२८०। बादरसूक्ष्मयोः सप्तदशोदयप्रक्षेपादुदयसङ्ख्या त्रिपञ्चाशच्छतानि त्रिन्यूनानि ।५२९७। एवं गुणपदध्रुवकस्थापना ।६८।३२।३२।६०।५२।४४।४४।२०। स्वलेश्यागुणा ।४०८।१९२।१९२।३६०।१५६।१३२।१३२।२०। एकत्र पिण्डिताः पञ्चदश शतानि द्वानवतानि ।१५९२। एतानि चतुर्विंशतिगुणान्यष्टात्रिंशत्सहस्राण्यष्टोत्तरद्विशताभ्यधिकानि भवन्ति पदानां ।३८२०८। बादरसूक्ष्मोदयपदान्येकोनत्रिंशत्प्रक्षेपात् पदसंख्या भवति, अष्टात्रिंशत्सहस्राणि शतद्वयं सप्तत्रिंशदधिकं ।३८२३७। तामेव संख्यां गाथयाऽऽह—

तिगहीणा तेवण्णा सया उ उदयाण होंति लेसाणं। अडतीस सहस्साइं पयाण सयदो य सगतीसा ॥११९॥

व्याख्या—त्रिभिर्विहीनानि त्रिपञ्चाशच्छतानि ।५२९७। उदयानां भवन्ति लेश्यासु। अष्टात्रिंशत्सहस्राणि शते द्वे च सप्तत्रिंशदधिके पदानामिति ।३८२३७। ( गाथार्थः ) ॥ ११९ ॥

योगेषूदया अधुनाऽभिधीयन्ते—"[१]मिच्छाइसु अप्पमत्तंतयाण" इत्यादि गुणेषु चतुर्विंशतीनां स्थापना ।८।४।४।८।८।८।८।४।

१. गाथा ३१।

पदध्रुवकाणां गुणक्रमेण स्थापना ।६८।३२।३२।६०।५२।४४।४४।२०। स्वयोगगुणाः ।८८४।४१६।३२०।७८०।५७२।५७२। ४८४।१८०। एकत्र पिण्डिताः द्विचत्वारिंशच्छतान्यष्टोत्तराणि।४२०८। एकैकमुदयं गृहीत्वा ध्रुवकाः कृता अतश्चतुर्विंशत्या गुणिता द्विनवतं नवशताभ्यधिकं लक्षं भवति, ।१००९९२। द्विकोदयपदानि चतुर्विंशतिरेकोदयपदानि पञ्च एवमेकोनत्रिंशन्नवयोगगुणा एकषष्टिशतद्वयं भवति, ।२६१। अनेन पूर्वराशिर्युक्तो लक्षं द्वादश शतानि त्रिपञ्चाशदधिकानि भवन्ति, ।१०१२५३। अस्याः पदसङ्ख्यायाः शोध्यं पात्यते, यतः सर्वगुणेषु स्वचतुर्विंशत्येकोदयपदसमुदाया ध्रुवकाः भवन्त्यतः सास्वादनस्य चतुर्विंशतिषु नपुंसकवेदोदयेन येऽष्टौ भङ्गास्ते वैक्रियमिश्रयोगे न भवन्ति, अतोऽष्टगुणानि ध्रुवकपदानि न सम्भवन्ति, । २५६ । अथवा सास्वादनोदयपदेभ्यः । ७६८ । नपुंसकवेदस्य यः त्रिभागः षट्पञ्चाशदधिकशतद्वयप्रमाणः स न भवति । एवमप्रमत्तेऽपि, किन्त्वत्र स्त्रीवेदोदयविभागः, द्वापञ्चाशदधिकत्रिशतप्रमाणः। ३५२ । आहारकयोगे स न सम्भवति। प्रमत्तस्य पदध्रुवकः षोडशगुणो न सम्भवति, यत आहारकेऽष्टौ तन्मिश्रे चाष्टौ स्त्रीवेदोदयकृता नोदयाः सम्भवन्ति, एवं सप्तशतानि चतुरुत्तराणि पदानां न भवन्ति ।७०४। अथवा तदुदयपदानां द्वौ त्रिभागौ न भवतः, तदुदयपदानि च ध्रुवके चतुर्विंशतिगुणे भवन्ति, ।१०५६। अविरते द्वात्रिंशद्गुणानि ध्रुवकपदानि न सम्भवन्ति, तानि चैकोनत्रिंशतिशतानि विंशत्युत्तराणि।११२०। यतस्तस्य चत्वारोऽष्टकाः कार्मणयोगेन स्त्रीवेदोदयेऽष्टौ वैक्रियमिश्रेऽप्येत एवाष्टौ (औदारिकमिश्रकाययोगेन स्त्रीवेदोदयेऽष्टौ एवं) नपुंसकवेदोदयाश्चाष्टौ न सम्भवन्ति। एवं सर्वसंयोगाः द्वात्रिंशत्शतानि द्वात्रिंशदधिकानि । ३२३२। मिथ्यादृष्टावसंभवि तासु चतुर्विंशतिषु द्वात्रिंशत् पदानि सक्षाणएनवेति । ३२। एतानि भवान्तरभाविषु त्रिषु योगेषु गुणानि षण्णवतिः भवति, चतुर्विंशतीनामेकैकोदये-

नैतान्यतश्चतुर्विंशत्या गुणिते त्रयोविंशतिशतानि चतुरुत्तराणि भवन्ति, । २३०४ । पदानाम् । सास्वादनात्यसम्भवितपदयुक्तानि पञ्चपञ्चाशच्छतानि षट्त्रिंशदुत्तराणि भवन्ति । ५५३६ । एतान्यसम्भवितपदानि पूर्वोक्तपदेभ्यः शोध्यानि, शेषं पञ्चनवतिसहस्राणि सप्तशतानि सप्तदशोत्तराणि । ९५७१७ । एतद् गाथयाह—

**चोद्दस उ सहस्साइं सयं च गुणहत्तरं उदयमाणं । सत्तरसा सत्तसया पणनउइ सहस्स पयसंखा ॥ १२० ॥**

व्याख्या—चतुर्दशसहस्राणि शतं चैकोनसप्तत उदयाना मानम् । १४१६९। सप्तदशाधिकानि सप्तशतानि पञ्चनवति सहस्राणि पदानां सङ्ख्या ।९५७१७। तुशब्दाद्योगेष्विति गाथार्थः १२० ॥ तमेवासम्भवं सूत्रेणाह—

**मीसदुगे कंमइए अणउदयविवज्जियाउ मिच्छस्स । चउवीसाउ ण चउरो तिगुणाओ तो रिणं ताओ ॥१२१॥**

व्याख्या—" मिश्रद्विके कार्मणमित्यौदारिकवैक्रियमिश्रकार्मणेषु अनन्तानुबन्ध्युदयवर्जिता मिथ्यादृष्टेश्चतस्रश्चतुर्विंशतयो न सम्भवन्ति । सप्तोदये एका अष्टोदये द्वे नवोदये चैका योगत्रयगुणा द्वादश तासूदयसङ्ख्याशतद्वयमष्टाशीतं । २८८ । एतदुदयेषु न सम्भवति, एतदष्टगुण त्रयोविंशतिशतानि चतुरुत्तराणि पदेषु न सम्भवन्ति, । २३०४ । एकः सप्तोदयो नवोदयो द्वावपि युतावर्द्धीकृतावष्टौ भवन्तीति भावः परमार्थं इति गाथार्थः ॥ १२१ ॥

**वेउव्वियमीसम्मी नपुंसवेओ न सासणे होइ । चउवीसचउक्काओ अओ तिभागा रिणं तस्स ॥ १२२ ॥**

व्याख्या—वैक्रियमिश्रयोगे नपुंसकवेदोदयो न सास्वादने भवति, अतस्तद्य चतुर्विंशतिचतुष्कात्रिभागो नपुंसकोपलक्षो न सम्भवति, तत्रिभागे च द्वात्रिंशदुदयाः । ३२ । उदयेषु न सम्भवन्ति, तेऽप्यष्टगुणाः शतद्वयं षट्पञ्चाशदधिकपदेषु न

सम्भवतीति गाथार्थः ॥ १२२ ॥

कम्मयविउव्विमीसे इत्थीवेओ न होइ सम्मस्स । अपुमित्थि उरलमीसे तचउवीसाण रिणमेयं ॥ १२३ ॥

व्याख्या—कार्मणवैक्रियमिश्रयोः स्त्रीवेदोदयो न सम्भवति, अतस्तच्चतुर्विंशतीनां द्वौ त्रिभागावष्टाविंशत्यधिकं शतमुदयानां न सम्भवति । औदारिकमिश्रयोगे तु स्त्रीनपुंसकवेदोदयौ न सम्भवतः, अत्रापि द्वौ त्रिभागौ तच्चतुर्विंशत्युदयानां न सम्भवतः । एवं हि द्वे शते षट्पञ्चाशदुत्तरे न सम्भवत उदयेष्वविरतस्य । २५६ । एत एवोदयाः पदध्रुवका उदयाष्टभागगुणा विंशत्युत्तराण्येकोनविंशतिशतानि पदेषु न सम्भवन्तीति । १९२० । गाथार्थः ॥ १२३ ॥

आहारगमीसेसुं इत्थीवेओ न होइ उ पमत्ते । दोण्णि तिभागाउ रिणं अपमत्तजइस्स उ तिभागो ॥ १२४ ॥

व्याख्या—आहारकमिश्रयोः स्त्रीवेदोदयो न सम्भवति प्रमत्तेऽतस्तदुदयानां द्वौ त्रिभागौ त्याज्यौ, तदुदयानां द्विनवतं शतं । १९२ । त्रिभागद्वयेनाष्टाविंशत्यधिकं शतं । १२८ । एतदुदयेषु न सम्भवति । अप्रमत्तयतेरेकत्रिभागे चतुःषष्टिरुदया यतस्तस्यैवास्मिन्नाहारके न स्त्रीवेदोदयो भवति । ६४ । उभयोरपि ध्रुवका अष्टभागगुणाः स्वोदयाः पदानि भवन्ति । प्रमत्ते सप्तशतानि चतुरुत्तराणि । ७०४ । अप्रमत्ते शतत्रयं द्विपञ्चाशदधिकं । ३५२ । इति गाथार्थः ॥ १२४ ॥ [1]एतदेव स्पष्टयति—

उदएसुं चउवीसा धुवगाउ पदेसु जोगमाईहिं । गुणिया मिलिया चउवीस ताडिया इयरसंजुत्ता ॥ १२५ ॥

व्याख्या—उदयेषु साध्येषु स्वचतुर्विंशतयः योगोपयोगलेश्याभिर्गुणिताः सत्यः पदेषु साध्येषु ध्रुवका गुणिताः सन्तः भूयश्च-

१ " पयं जोगुवयोगा " इत्यादिगाथोक्तं स्पष्टयति ।

तुशत्या गुणिता इतरोदयैः पदैर्वा तथाभूतैस्तद्गुणगुणितैर्युता गुणोदयाः गुणपदानि वा भवन्तीति गाथार्थः ॥ १२५ ॥

असम्भवितोदयसाधनोपायमाह—

अपमत्तसासणेसुं अडसोल पमत्त सम्म बत्तीसा । मिच्छंमि य सण्णउई ठावेज्जा सोहणनिमित्तं ॥ १२६ ॥

व्याख्या—अप्रमत्तसास्वादनयोरष्टावष्टौ, षोडश प्रमत्ते, सम्यग्दृष्टौ द्वात्रिंशत्, मिथ्यादृष्टौ षण्णवतिम्, स्थापयत शोधननिमित्तमिति गाथार्थः ।८। ८। १६। ३२। ९६। ॥ १२६ ॥

जोगतिगेणं मिच्छे नियनिय चउवीसगाहिं सेसाणं । गुणिऊणं पिंडेज्जा सेसा उदयाण परिसंखा ॥ १२७ ॥

व्याख्या—योगत्रिकेण मिथ्यादृष्टौ षण्णवतिं गुणयित्वा, आत्मीयचतुर्विंशतिभिः शेषाणां स्थापितान् राशीन् गुणयित्वा ।६४। ३२। १२८। २५६। २८८। सर्वेषां पिण्डः सप्तशतान्यष्टषष्ठानि ७६८ एतानपनयेत्, शेषा उदयानां परिसङ्ख्या भवति, तुशब्दाद्योगविषया इति गाथार्थः ॥ १२७ ॥

चउवीसाइगुणेज्जा पयाणिअहिगिच्च मिच्छछण्णउई । सेसाणं धुवगेहिं एगीकिच्चा तओ सोहे ॥ १२८ ॥

व्याख्या—चतुर्विंशत्या गुणयेत् पदान्यधिकृत्य मिथ्यादृष्टेः षण्णवतिं ।२३०४। शेषाणां सास्वादनादीनां ध्रुवकैर्गुणयेत्, अष्टाष्टषोडशद्वात्रिंशत्प्रगुणकराशीन् ।३५२। २५६। ७०४। १९२०। एकीकृताः ।५५३६। ततः पूर्वपदेभ्यः शोधयेदिति गाथार्थः ॥ १२८ ॥ उक्तं मोहनीयावशेषं नाम्नोऽवशेषमाह—

बंधोदयसंताइं गुणेसु कहियाइ नाम कम्मस्स । गइसु य अवगडंमी वोच्छामी इंदिएसु पुणो ॥ १२९ ॥

व्याख्या—बन्धोदयसत्स्थानानि गुणेषु कथितानि नामकर्मणः गतिषु चाव्यक्तमस्तावे । वच्मि—कथयामि, इन्द्रियेषु पुनः। चशब्दात्सामान्योक्तौ सर्वबन्धोदयभङ्गकप्राप्तौ विशेषोपादानाय विवियते—मिथ्यादृष्टौ ये स्थावरप्रायोग्यास्त्रयो बन्धास्तद्भङ्गाश्चत्वारो, विंशतिः षोडश तस्यत्र विकल्पाः स्युः ।४०। विकलेन्द्रियप्रायोग्या ये त्रयो बन्धाः ।२५। २९। ३०। तद्भङ्गाश्चैकपञ्चाशत्ते तस्यैव भवन्ति ।५१। पञ्चेन्द्रियतिर्यक्प्रायोग्या ये त्रयो बन्धाः ।२६। २९। ३०। भङ्गकानां द्विनवतिशतानि सप्तदशोत्तराणि ।९२१७। एते मिथ्यादृष्टेरेवाखिलाः । मनुष्यप्रायोग्यौ द्वौ बन्धौ ।२५।२९। अनयोः षट्चत्वारिंशच्छतानि नवोत्तराणि मिथ्यादृष्टौ भवन्ति, नरकप्रायोग्योऽष्टाविंशतिबन्धस्तद्भङ्गकश्च मिथ्यादृष्टेरेव भवति, देवप्रायोग्योऽष्टाविंशतिबन्धः, तदष्टौ भङ्गा मिथ्यादृष्टौ भवन्ति, एवमेकत्र त्रयोदश सहस्राणि नवशतानि षड्विंशत्यधिकानि भवन्ति,।१३९२६। षोडश तीर्थंकरनाम्नो. १६ द्वौ आहारकेण सह एको यशोबन्धो न भवतीति मिथ्यादृष्टौ । सास्वादने देवप्रायोग्याऽष्टाविंशतिबन्धस्तद्भङ्गाश्चाष्टौ भवन्ति ।८। पञ्चेन्द्रियतिर्यक्प्रायोग्य एकोनत्रिंशद् बन्धस्तद्भङ्गानां द्वात्रिंशच्छतानि ।३२००। मनुष्यप्रायोग्यश्चैकोनत्रिंशद्बन्धस्तद्भङ्गानां द्वात्रिंशच्छतानि ।३२००। तिर्यक्प्रायोग्यस्त्रिंशद् बन्धस्तद्भङ्गानां द्वात्रिंशच्छतानि ।३२००। सास्वादने भवन्ति । अस्य च पञ्चसंस्थानसंहननभेदत इयन्त एव भङ्गा भवन्ति, त्रिष्वपि स्कन्धेषु षण्णवतिशतान्यष्टोत्तराणीति ।९६०८। देवप्रायोग्योऽष्टाविंशतिबन्धः, तद्भङ्गाश्चाष्टौ ८ मनुष्यप्रायोग्य एकोनत्रिंशद्बन्धस्तद्भङ्गाश्चाष्टौ स्थिरशुभयशोभिः निष्पन्ना भवन्ति, सर्वेऽपि सम्यग्मिथ्यादृष्टौ षोडशेति, ।१६। अविरतस्याप्येते षोडशान्यो देवप्रायोग्य एकोनत्रिंशद्बन्धस्तद्भङ्गाश्चाष्टौ ८ मनुष्यप्रायोग्यस्त्रिंशद्बन्धस्तद्भङ्गाश्चाष्टौ एवमविरते द्वात्रिंशद्भङ्गा भवन्तीति ।३२। देवप्रायोग्यावष्टाविंशत्येकोनत्रिंशद्बन्धौ तद्भङ्गाश्च षोडश

देशविरते भवन्तीति ।१६। देवप्रायोग्यौ अष्टाविंशत्येकोनत्रिंशद्बन्धौ तद्भङ्गाश्च षोडश प्रमत्ते भवन्तीति ।१६। देवप्रायोग्या अष्टाविंशत्येकोनत्रिंशत्त्रिंशदेकत्रिंशद्बन्धास्तद्भङ्गाश्चाष्टादशाप्रमत्ते भवन्तीति । अपूर्वकरणेऽप्येत[1] एव चत्वारो यशोबन्धभङ्गश्च पञ्चमः ५ । बादरसूक्ष्मयोः यशोभङ्ग एव १ ततस्ततो नाम्नो बन्धाभाव इति ॥ सप्ताहारकप्रायोग्यानष्टौ तीर्थङ्करप्रायोग्यानुद्योतेनोत्तरवैक्रिये त्रीन् मनुष्यगतौ मुक्त्वा शेषाः सर्वेऽपि तिर्यङ्मनुष्यसामान्योत्तरवैक्रियोदया अखिलास्तद्भङ्गाश्च भवन्ति, देवप्रायोग्या नरकप्रायोग्याश्चोदयास्तद्भङ्गाश्च सर्वे भवन्ति । एवं हि एकत्रिंशत्यामुदयानां सप्तसप्तशतानि त्रिसप्तत्यधिकानि मिथ्यादृष्टौ भङ्गाः भवन्ति, ।७७७३। यतस्तस्य तीर्थङ्कराहारकरहिताः प्रकृतय उदयं गच्छन्ति । एकद्वित्रिचतुरिन्द्रियपर्याप्तकप्रायोग्यैकविंशत्युदयसत्कश्च द्वौ द्वौ यशोऽयशोभ्यां निष्पन्नौ सास्वादनेऽष्टावेव भवन्ति, ।८। यतस्तस्य न सूक्ष्मनिकोदयः । पञ्चेन्द्रियतिर्यङ्मनुष्यपर्याप्तदेवयोग्यैकविंशत्युदयस्तद्भङ्गाश्चाष्टावष्टौ सुभगादिभिः निष्पन्ना [2]नारकोदयश्चैवं पञ्चविंशतिभङ्गाः, एवं भवान्तरोदये त्रयस्त्रिंशत् ।३३। एकेन्द्रियपर्याप्तयोग्यश्चतुर्विंशत्युदयस्तद्भङ्गकौ च द्वौ भवतः । उत्तर[3] वैक्रियमनुष्यतिर्यक्प्रायोग्यो देवयोग्यश्च पञ्चविंशत्युदयस्तद्भङ्गाश्चाष्टावष्टौ एको [4]नारकप्रायोग्य एव शरीरपर्याप्तौ पञ्चविंशतिर्भङ्गा भवन्ति, । २५ ।

---

१ अप्रमत्तोक्ता एव चत्वारो बन्धाः बन्धनिर्देशेन तद्भङ्गाश्चाशदय निर्दिष्ट । २-४ एतौ भङ्गौ मलयगिरिभिः न्यायाचार्यैश्च न स्वीकृतौ नरकेषु सास्वादनानुत्पत्ते, अत एव मूले सास्वादने वैक्रियमिश्रयोगित्वं नपुंसकवेदे "वेउव्वियमीसम्मी नपुंसवेओ न सासणे होइ" इति गाथायां प्रतिषिद्धम् । ३ तिर्यग्मनुष्याणां सास्वादने वैक्रियप्रत्ययिका; षोडश भङ्गा मलयगिरिभिः न्यायाचार्यैश्च न स्वीकृता.

पर्याप्तविकलेन्द्रियप्रायोग्यः षड्विंशत्युदयस्तद्भङ्गाश्च षट् भवन्ति, पर्याप्तपञ्चेन्द्रियतिर्यक्प्रायोग्यः षड्विंशत्युदयस्तद्भङ्गाश्चाष्टाशीति-द्विशतप्रमाणाः सास्वादने भवन्ति, मनुष्यप्रायोग्या अप्येवमेव, एवं षड्विंशत्युदये पञ्चशतानि द्व्यशीतानि ।५८२। चतुःपञ्चषड्विंशत्युदयेषु शरीरपर्याप्तिकाले सास्वादनस्य षट्शतानि नवोत्तराणि भवन्ति, ।६०९। तदुत्तरकाले सास्वादनत्वमपसरति, अतः सप्ताष्टाविंशत्युदयौ न भवतः। भवस्थनारकसास्वादनस्यैकोनत्रिंशदुदयस्तद्भङ्ग एकः, एवं देवसास्वादनस्यैकोनत्रिंशत्त्रिंशदुदयौ तद्भङ्गाश्च स्वरादिभेदतः षोडश भवन्ति । एवं भवस्थमनुष्यस्य त्रिंशदुदयस्तद्भङ्गानामेकादश शतानि द्वापञ्चाशदधिकानि भवन्ति, ।११५२। एवं भवस्थतिर्यक्सास्वादनस्य त्रिंशदेकत्रिंशदुदयौ तद्भङ्गानां च त्रयोविंशतिशतानि चतुरुत्तराणि भवन्ति ।२३०४। अस्योद्योतेन प्राक्कल्पितेन ये भङ्गास्ते न भवन्ति, यतस्ते करणापर्याप्तका नच तत्र सास्वादनत्वमस्ति, सर्वभङ्गानामेकचत्वारिंशच्छतानि, पञ्चदशोत्तराणि। ४११५ । नारकसम्यग्मिथ्यादृष्टावेकोनत्रिंशदुदयो भङ्गश्चैकः। तिर्यक्सम्यग्मिथ्यादृष्टेः त्रिंशदुदयस्तद्भङ्गानामेकादश शतानि द्वापञ्चाशदधिकानि । ११५२ । एवं मनुष्येऽप्येकादश शतानि द्वापञ्चाशदधिकानि । ११५२ । देवस्य [1]षोडश । १६ । तिर्यक्सम्यग्मिथ्यादृष्टेरेकत्रिंशदुदयस्तद्भङ्गानामेकादश शतानि द्वापञ्चाशदधिकानि ।११५२। एवं सर्वेऽपि चतुस्त्रिंशच्छतानि त्रिसप्ततानि । ३४७३ । भवान्तरोदये सम्यग्दृष्टेस्तिसृषु गतिष्वष्टावष्टौ भङ्गा एको नरकगतावेवं पञ्चविंशतिः । २५ । एवं पञ्चविंशत्युदयेऽपि पञ्चविंशतिभङ्गाः । २५ ।

१ मलयगिर्यादिभिरष्टौ भङ्गाः एकोनत्रिंशदुदयसत्काः प्रोक्ताः, न त्रिंशदुदयसत्काः अष्टौ, अत्रोत्तरवैक्रियाविवक्षैव बीजमवसीयते, यथा पञ्चविंशत्युदये ।

किन्तु तिर्यग्मनुष्ययोरुत्तरवैक्रियकाले सम्भवन्ति । मनुष्याविरतस्य षड्विंशत्युदये द्वे शतेऽष्टाशीते भङ्गानां । २८८ । एवं तिरश्चोऽपि । २२८ । सप्तविंशतिभङ्गाश्चतुर्गतिकस्याविरतस्य । २५ । अष्टाविंशत्युदये देवस्य षोडश । १६ । उत्तरवैक्रियतिरश्चोऽपि षोडश । १६ । मनुष्यस्याष्टावेको नारकस्य चतुर्थपर्याप्तौ तिर्यग्मनुष्ययोरष्टाविंशत्युदये पञ्च २ शतानि षट्सप्ततानि । ५७६ ।५७६। एवमेकादश शतानि त्रिनवतानि । ११९३ । एकोनत्रिंशदुदये देवाविरतस्य षोडश भङ्गाः । १६ । एको नारकस्य, उत्तरवैक्रियमनुष्यस्याष्टौ, तिरश्चः षोडश । १६ । चतुर्थपर्याप्तौ तिरश्च उच्छ्वासोद्योताभ्यामेकादश शतानि द्वापञ्चाशदधिकानि । ११५२ । मनुष्याविरतस्य पञ्चशतानि षट्सप्ततानि । ५७६ । एवमेकोनत्रिंशदुदये सप्तदशशतान्येकोनसप्ततानि । १७६९ । त्रिंशदुदये मनुष्याविरतस्य एकादश शतानि द्वापञ्चाशदधिकानि । ११५२ । तिरश्चः सप्तदश शतान्यष्टाविंशत्यधिकानि । १७२८ । देवस्याष्टौ, तिरश्चोऽप्युत्तरवैक्रिये । ८ । एवं त्रिंशदुदये अष्टाविंशतिशतानि षण्णवत्यधिकानि । २८९६ । एकत्रिंशदुदये तिरश्च एकादशशतानि द्वापञ्चाशदधिकानि । ११५२ । एवमविरतस्योदयानां षट्सप्ततिशतानि एकषष्टानीति । ७६६१ । उत्तरवैक्रियकारिणो मनुष्यस्य तिरश्चो वा देशविरतस्य पञ्चविंशतिसप्तविंशतित्रिंशदुदयेषु एकैकः, अष्टाविंशत्येकोनत्रिंशदुदययोः द्वौ द्वौ भङ्गावेवमुभयोश्चतुर्दश । १४ । आह वैक्रियषट्कस्योदयोऽविरतादूर्ध्वं प्राक्प्रतिषिद्धः कस्मादस्योत्तरवैक्रियकरणे तदुदयो व्याख्यायते ? अत्रोच्यते–तत्र भवप्रत्ययस्य निषेधः, न गुणप्रत्ययस्य, यतः प्रमत्ताप्रमत्तयोरपि तथा विविधक्रियाविशेषतो वैक्रियाहारकशरीरयोस्तद्भावे चोद्योतस्यापि उदयो भवति, स्थूलभद्रविष्णुकुमारादीनामिव न सर्वेषामिति न दोषः । भवस्थमनुष्यदेशविरतस्य त्रिंशदुदये चतुश्चत्वारिंशदधिकं शतं भङ्गानां भवति, । १४४ । एवं तिरश्चो देशविरतस्यापि । १४४ । एकोनत्रिंशदुदयेऽ-

न्येवमेव तिरश्चो देशविरतस्य । १४४ । एते च षट्संस्थानसंहननस्वरविहायोगतिभेदाद् भवन्ति, एवमेकत्र [1]चत्वारि शतानि षट्चत्वारिंशदधिकानि । ४४६ । एवं प्रमत्तेऽप्युत्तरवैक्रियाहारकोदयेषु चतुर्दश भङ्गाः । १४ । मनुष्यप्रमत्तस्य त्रिंशदुदये चतुश्चत्वारिंशदधिकं शतं । १४४ । एवमेकत्राष्टपञ्चाशदधिकं शतं । १५८ । अप्रमत्तस्यैकोनत्रिंशदुदये निष्पन्नाहारकशरीरस्यैको भङ्गः, यतस्तत्काले दुःस्वरोदयोऽप्रतिषिद्धोऽपि न भवति । त्रिंशदुदयेऽप्येको भङ्गः, अत्रोद्योतोदयो भवति प्रतिषिद्धोऽपि तच्छरीरप्रभावात् । एवमुत्तरवैक्रियेऽपि द्वौ भङ्गौ मनुष्याप्रमत्तस्य । त्रिंशदुदये चतुश्चत्वारिंशदधिकं शतं भवति । १४४ । एकत्राष्टचत्वारिंशदधिकं शतं । १४८ । अपूर्वकरणबादरसूक्ष्मोपशान्तेषु प्रत्येकं त्रिंशदुदयो भवति, द्वासप्ततिभङ्गाः, यतस्तेषु संहननत्रयस्यैवोदयः । क्षीणकषायस्यापि त्रिंशदुदयश्चतुर्विंशतिभङ्गाः, यतोऽस्याद्यस्यैवोदयः संहननस्य । सयोगिनो विंशत्येकविंशत्युदययोरेकैकः, षड्विंशत्युदये संस्थानभेदात् षड्भङ्गाः, सप्तविंशत्युदयेऽप्येकः तीर्थकरस्य, नास्ति संस्थानभेदः, अष्टाविंशत्युदये द्वादश भङ्गाः, संस्थानविहायोगतिभेदात्, एकोनत्रिंशदुदये एकस्तीर्थङ्करस्य, अतीर्थङ्करस्य द्वादश, त्रिंशदुदये एकस्तीर्थकरस्य चतुर्विंशतिरतीर्थकरस्य, स्वरभेदात्, एकत्रिंशदुदयेऽप्येकः, सर्वेऽप्येकत्र षष्टिः ।६०। अयोगिन उभयोरप्येकैकः एवं भाव्यमिति गाथार्थः ॥१२९॥

इगि विगले पण बंधा अडवीसूणा उ अट्ठ इयरंमि । पंच छ एक्कारस्सा पण पण बारस उ संताणि ॥१३०॥

---

[1] सप्ततिकासंस्तबके वैक्रियमनुष्याणामुद्योतोदयास्वीकारेणोद्योतोदयसस्कानि त्रीणि न्यूनानि चत्वारिंशताभि षट्चत्वारिंशदधिकानि अष्टाविंशतिबन्धके एकोनत्रिंशद्बन्धके मनुष्यसत्कानि अष्टचत्वारिंशदधिकं शतं उभयोर्मिलने पञ्चनवत्यधिकानि पञ्चशतानि ।५९५। देशविरते।

व्याख्या—एकेन्द्रियेषु विकलेन्द्रियेषु पञ्च पञ्च बन्धा भवन्ति जात्याख्यायामेकवचनम्, त्रयोविंशत्याद्या अष्टाविंशत्याहीनाः, किमुक्तं भवति-त्रिपञ्चषड्विंशतिबन्धा एकेन्द्रियायोग्याः, पञ्चविंशत्येकोनत्रिंशत्त्रिंशद्बन्धास्तिर्यङ्मनुष्यायोग्या इति। 'इयरम्मि' त्ति, पञ्चेन्द्रियेष्वाष्टावपि भवन्ति। पञ्चाद्येकादशोदयाः यथासङ्ख्येन पञ्चैकेन्द्रियेष्वेकविंशत्याद्या उदयाः, षट् विकलेन्द्रियेषूदया एकविंशतिषड्विंशतिअष्टाविंशत्याद्याश्च पञ्चेन्द्रियेष्वेकादशोदयाः, यतश्चतुर्विंशत्युदयः एकेन्द्रियेष्वेव। एकेन्द्रियविकलेन्द्रियेषु पञ्च सत्स्थानानि। द्विनवत्यष्टाशीति अध्रुवत्रिकं चेति। तुशब्दोऽपिशब्दार्थः पञ्चेन्द्रियेषु द्वादशापीति गाथार्थः ॥ १३० ॥

जीवस्थानेष्वाह—

नाणंतरायदंसण बन्धोदयसंत भंग जे मिच्छे। ते तेरसठाणेसु सण्णिंमि गुणासिया सवे ॥ १३१ ॥

व्याख्या—बन्धोदयसत्स्थानेषु पञ्च ज्ञानान्तराययोः दर्शनावरणे नव सद्बन्धयोरुदये पञ्च, चत्वारो वा ९।४।५। एवंभूता ये मिथ्यादृष्टौ भङ्गाः त्रिषु कर्मसु ते त्रयोदशसु जीवस्थानेषु भवन्ति। संज्ञिनि ये गुणस्थानोक्ता सर्वेऽपि भङ्गा भवन्तीति गाथार्थः ॥ १३१ ॥

तेरससु वेयणीयस्स आइमा होंति भंगया चउरो। निच्चुदय तिण्णि गोए सव्वे दोण्हंपि सण्णिस्स ॥१३२॥

व्याख्या—त्रयोदशसु जीवस्थानेषु वेदनीयस्याद्याश्चत्वारो भङ्गा भवन्ति, सातासातबन्धोपलक्षिताः। नीचैर्गोत्रोदये ये त्रयो भङ्गा व्यवस्थितास्ते त्रयोदशसु जीवस्थानेषु भवन्ति संज्ञिनो द्वयोरपि कर्मणोरखिलाः सम्पूर्णा अपिशब्दात्करणापर्याप्तसंज्ञिदेवस्य चतुर्थोऽपि भवतीति गाथार्थः ॥ १३३ ॥

तिरिउदए नव भंगा जे ते सव्वे असण्णि पज्जत्ते। नारय सुर चउभंगाय रहिया इगिविगलदुविहाणं ॥१३३॥

व्याख्या—तिर्यगायुरुदये नव भङ्गास्ते सर्वेऽप्यसंज्ञिनि पर्याप्ते भवन्त्यायुषः। नारकसुरचतुर्भङ्गकरहितास्त एव नव पञ्च भवन्ति, एकेन्द्रियाणां (विकलेन्द्रियाणां) पर्याप्तापर्याप्तानां देवनारकबन्धोपलक्षितौ तद्बन्धोपरमभङ्गौ च न भवत इति गाथार्थः ॥१३३॥

असण्णि अपज्जत्ते तिरिउदए पंच जह उ तह मणुए। मणपज्जत्ते सव्वे इयरे पण दस उ पुव्वुत्ता॥ १३४ ॥

व्याख्या—असंज्ञिन्यपर्याप्ते तिर्यगायुरुदये पञ्च भङ्गा यथा भवन्ति, तथा मनुष्यायुरुदयेनापि ये पञ्च भङ्गास्ते मनुष्यासंज्ञ्यपर्याप्तस्य भवन्ति। संज्ञिपर्याप्तस्य सर्वेऽपि अष्टाविंशतिसङ्ख्या अपि भवन्ति। 'इतरे' त्ति मनसा अपर्याप्ते संज्ञिसामान्ये मनुष्ये पञ्च तिरश्चपि पञ्च माणुक्ता उभयोरपि दश तुशब्दात् देवनारकयोः करणापर्याप्तयोः स्वायेकैकभङ्गो भवति, एवं द्वादश, लब्ध्यपर्याप्तके दशैव, असंज्ञिन्यपर्याप्तके सम्मूर्छिमनुष्यसम्भवाच्चेति गाथार्थः ॥ १३४ ॥

बंधोदयसंताइं पुण्णाइं सण्णिणो उ मोहस्स। बायरविगलासण्णिसु पज्जेसु दु आइमा बंधा ॥ १३५ ॥

व्याख्या—बन्धोदयसत्स्थानानि पूर्णानि—अविकलानि, पर्याप्तसंज्ञिनो मोहनीयस्य भवन्ति। बादरैकेन्द्रियद्वित्रिचतुरिन्द्रियासंज्ञिषु पर्याप्तनामकर्मोदयेषु तुशब्दादाहारपर्याप्तावेकविंशतिबन्धोऽपि स्यात्, लब्धिकरणापर्याप्तकेषु द्वाविंशतिबन्ध एव भवति, अतो द्वावाद्यौ बन्धौ पञ्चसु भवत इति गाथार्थः ॥ १३५ ॥

अट्ठसु बावीसो चिय बंधो अट्ठाइ उदयतिण्णेव। सत्तगजुया उ पंचसु अडसत्त छवीस संतंमि ॥ १३६ ॥

व्याख्या—अष्टसु जीवस्थानेषूक्तशेषेषु सूक्ष्मबादरविकलासंज्ञिसंज्ञ्यपर्याप्तेषु सूक्ष्मपर्याप्ते च द्वाविंशतिबन्ध एव भवति, तद्-

भणने भङ्गका अप्यविकला निर्दिष्टास्ते न पृथगुक्ताः । अष्टादयस्त्रय उदया अष्ट नवदशेति अष्टसु पूर्वोक्तजीवस्थानेषु । सप्तकयुक्तास्त एवाष्टादयस्त्रय उदयाःसप्ताष्ट नवदशेति पञ्चसु पूर्वोक्तस्थानेषु भवन्ति । उभयोरपि पञ्चकाष्टकयोः किमुक्तं भवति-त्रयोदशसु जीवस्थानेषु अष्टसप्तषड्विंशतयः त्रीणि सत्स्थानानि भवन्ति, भङ्गकास्तद्गता अविकला भवन्ति । तुशब्दात् पञ्चानां यदैकविंशतिबन्धस्तदा सप्तादय उदयाः, अष्टाविंशत्येव सत्स्थानम्, यदा तु द्वाविंशतिबन्धस्तदाष्टादयोऽभिहिता एवोदयाः । संज्ञिनः करणापर्याप्तस्य पूर्वोक्तं सर्वमपि स्यात् । द्वितीयविकाराधिक्यात् यदा तस्य करणापर्याप्तस्य सप्तदश बन्धो भवति, तदा षडाद्याश्चत्वार उदया अष्टाविंशतिचतुर्विंशत्येकविंशति त्रीणि सत्स्थानानि सविकल्पानि भवन्तीति गाथार्थः ॥ १३६ ॥

सण्णिम्मि अट्ठसण्णिम्मिछा इमा तेऽट्ठयोसपरिहीणा । पज्जत्तविगलबायरसुहुमेसु तहा अपज्जाणे ॥ १३७ ॥

व्याख्याः—सञ्ज्ञिनि पर्याप्ते अष्टापि बन्धाः सभेदा भवन्ति । असंज्ञिनि षडाद्या एकोनिशदेकबन्धौ वर्ज्जयित्वा शेषा भवन्ति, त एव षडष्टाविंशतिविहीनाः पञ्चबन्धा भवन्ति, पर्याप्तविकलेन्द्रियबादरसूक्ष्मैकेन्द्रियेषु, तथा तेष्वेवापर्याप्तेषु । सप्तम्यर्थे षष्ठिकरणादपर्याप्तनामोदययोरसंज्ञिसञ्ज्ञिनोरप्येत एव पञ्च बन्धा भवन्ति । अपर्याप्तानां तदुपलक्षिता भङ्गाः, एवं सूक्ष्मबादरपर्याप्तोपलक्षितास्तद्विधानां इन्द्रियोपलक्षिताश्च स्वबुद्धया योजनीया इति गाथार्थः ॥ १३७ ॥

इगवीसाई दो चउ पण उदया पज्जसुहुमबाराणं । सण्णिस्स अ चउवीसा इगि छव्वीसाइ सेसाणं ॥ १३८ ॥

व्याख्या—एकविंशत्याद्यौ द्वावुदयौ लब्ध्याऽपर्याप्तकस्य सप्तभङ्गकस्य भवतः । एकोनत्रिंशतिचतुर्विंशत्युदयावेकेन्द्रियापर्याप्तस्य द्विविधस्यापि । एकविंशतिषड्विंशत्युदयौ त्रसापर्याप्तस्य पञ्चभङ्गकस्य भवतः । एकविंशत्याद्याश्चत्वार उदयाः पर्याप्तसूक्ष्म-

स्थैकेन्द्रियप्रायोग्या एव भवन्ति । एकविंशत्याद्याः पञ्चोदयाः पर्याप्तबादरकेन्द्रियप्रायोग्याः भवन्ति । विकल्पाः स्वनामोदयाङ्काः गुणाना एव । पर्याप्तसंज्ञिनश्चतुरशत्युदयं वर्जयित्वा सर्वेऽप्युदया भवन्ति । पर्याप्तपञ्चेन्द्रियन मोदयाङ्का विकल्पाश्च । एकविंशति-षड्विंशत्युदया एकोनत्रिंशत्याद्याश्चत्वार उदयाः शेषाणां पर्याप्तनामोदयवतां द्वित्रिचतुरिन्द्रियासंज्ञिनां भवन्तीति गाथार्थः ॥१३८॥

तेरससु पंच संता तिण्णि धुवा अट्ठमीइ थाणउइ । सण्णिस्स होंति बारस गुणठाणकमेण नामस्स ॥१३९॥

व्याख्या—त्रयोदशसु जीवस्थानेषु पञ्च सत्स्थानानि भवन्ति, द्वानवत्यष्टाशीत्यष्टकनिक चेति । संज्ञिनो द्वादशापि गुणस्थानक्रमेण । पञ्चेति सिद्धेऽप्यर्थे धुवा ग्रहणात् ज्ञापयति-संज्ञिन्यपर्याप्तेऽन्यदपि तीर्थङ्करोपलक्षितं सत्स्थानद्वयं नोपन्नो-भवतीति गाथार्थः ॥ १३९ ॥ उक्त जीवस्थानेषु कर्मबन्धविधानम् । कर्मणो गत्यादिषु बन्धादिषु सत्प्ररूपणामाह—

बज्झंति सत्त अट्ठ य नारयतिरिसुरगईसु कम्माई । उदीरणावि एवं संतोइण्णाइं अट्ठ तिसु ॥ १४० ॥

व्याख्या—नारकतिर्यक्सुरगतिषु सप्ताष्टौ वा कर्माणि बध्यन्ते, उदीरणाप्येवमेव । सदुदीरणानि अष्टौ तिसृष्वपि लभ्यन्ते इति गाथार्थः ॥ १४० ॥

गुणभिहियं मणुएसु सगलतसाणं च तिरियपडिवक्खा । मणजोगी छउमाइ व कायवई जह सजोगीणं॥१४१॥

व्याख्या—गुणस्थानेषु यदभिहितं तदखिल मनुष्येषु-मनुष्यगतौ भवति, इन्द्रियद्वारे 'सकलेष्वि'ति पञ्चेन्द्रियेषु, कायद्वारे त्रसेषु गुणस्थानाभिहितं सर्वत्र स्वनामोदयोपलक्षित भवति, स्वनामाकृतिप्रगतिवत् तिर्यग्गतिप्रकारास्तद्विपक्षा एके-न्द्रियविकलेन्द्रियाः स्थावरकायिकाश्च वक्तव्याः मनोयोगिनो जीवाः संज्ञिछद्मस्था इव वक्तव्याः । ये क्षीणकषायस्थानेषु कर्मणां

प्रकारास्ते मनसि भवन्ति, न सयोगिकेवलिनो, मनसोऽव्यापारादिति काययोगिनो वाग्योगिनश्च सयोगिपर्यन्तगुणप्रकारा भवन्ति । णमिति वाक्यालङ्कारे इति गाथार्थः ॥ १४१ ॥

वेई नवगुणतुल्ला तिकसाइवि लोभदसगुणसमाणो । सेसाणि वि ठाणाइं एएण कमेण नेयाणि ॥१४२॥

व्याख्या—वेदाः विद्यन्ते येषां ते वेदिनः ते स्त्रीपुंनपुंसकवेदोदयिनः प्राणिनो बादरकषायावसाननवगुणैस्तुल्याः, ये तेषु कार्म्मण प्रकाराः ते त्रिष्वपि वेदोदयेषु भवन्ति । एवं क्रोधमानमायोदयेष्वपि लोभे दशमगुणतुल्यमपि भवति । शेषाण्यपि स्थानानि लेश्यादीनि अनेनैव क्रमेण ज्ञातव्यानि अप्रमत्ततुल्यं पञ्चसु लेश्यासु, योगितुल्यं शुक्ललेश्यायाम् । प्रमत्ताद्ययोगिपर्यन्तेषु ये कार्मण प्रकारास्ते सप्तमे भवन्ति ( देशसप्तमे देशविरतमित्र । ) दर्शनज्ञानान्युपयोगास्ते यत्र गुणे यावन्तस्ते तद्गुणप्रकारा भवन्ति । भव्येषु चतुर्दशगुणतुल्यं भवति । संज्ञिषु द्वादशगुणतुल्यम् । असंज्ञि ( षु मिथ्यादृष्टिसास्वादनयोरिव ) अभव्येषु च प्रथमगुणतुल्य, अविरतादेकादशगुणतुल्यं सम्यक्त्वे । मिथ्यादृष्टिसास्वादनाविरतसयोग्ययोगितुल्यमनाहारके । त्रयोदशगुणतुल्य आहारके भवति । "[1]कम्माणि" एतावातिदेशोऽभिहितम्, अनया दिशा न्यूनाधिक स्वबुद्ध्या भणनीयम् । प्राग्गुक्तालोकनाद्वा इति गाथार्थः ॥ १४२ ॥

गुणस्थानेषु '[2]जा अपमत्तो सत्तट्ठ बंधगा' इत्यादिना सत्पदप्ररूपणा कृतैव, द्रव्यप्रमाणमाह—

सत्तरसुत्तरमेगुत्तरं तु नो उत्तरोउ सगसयरो । नत्तड्डी निगसओ गुणसओ अड्डवगा य ॥ १४३ ॥

---

१ गा. १४० पूर्वार्द्धान्तिमपदम् । २ द्वार ५ गाथा २ ।

व्याख्या—विंशत्युत्तरशतं बन्धमाश्रित्य प्रकृतीनामभिहितं तस्मादाहारकशरीराङ्गोपाङ्गतीर्थकरप्रकृतयो मिथ्यादृष्टौ न भवन्ति, शेषं सप्तदशोत्तरं शतं बन्धं प्रति सम्भवति । ११७ । सास्वादने पूर्वोक्तास्तिस्रः मिथ्यात्वाद्याश्च षोडश मिथ्यात्वनपुंसकसूक्ष्मत्रिकविकलत्रिकनारकत्रिकैकेन्द्रियजातिस्थावरातपान्त्यसंहननसंस्थानानीति एकोनविंशतिः भवति, शेषमेकोत्तरं शतं भवति । तुशब्दो गुणस्थानख्यापकः । सम्यग्मिथ्यादृष्टौ पूर्वोक्ता एकोनविंशतिरुद्योताद्याश्च पञ्चविंशतिरुद्योतं स्त्यानर्द्धितिर्यग्[1]दुःस्वरत्रिकाणि मध्यमसंस्थानसंहननानन्तानुबन्धिचतुष्काणि स्त्रीवेदाप्रशस्तविहायोगतिनीचैर्गोत्रमिति चतुश्चत्वारिंशदेवमनुष्यायुः सहिता न सम्भवन्ति, शेषा चतुःसप्ततिः बन्धं प्रति सम्भवति । ७४ । असावेव चतुःसप्ततिर्मनुष्यदेवायुस्तीर्थकरसहिता सप्तसप्ततिरविरते बन्धं प्रति भवति । द्वितीयतुशब्दस्त्वायुर्बन्धकान्तर्गतोऽपि सम्यग्मिथ्यादृष्टिरायुषामबन्धक इति ख्यापयति । असावेव सप्तसप्ततिरप्रत्याख्यानावरणौदारिकद्विकमनुष्यत्रिकाद्यसंहननवर्जा सप्तषष्टिर्देशविरते बन्धं प्रति भवति । ६७ । असावेव सप्तषष्टिः प्रत्याख्यानावरणवर्जा त्रिषष्टिः प्रमत्ते भवति । ६३ । असावेव त्रिषष्टिरस्थिराशुभायशोऽरतिशोकासातवर्जाहारकद्विकयुक्ता एकोनषष्टिरप्रमत्ते भवति । ५९ । असावेव देवायुर्वर्जाष्टपञ्चाशदपूर्वकरणे बन्धं प्रति भवति, चशब्दः क्रमोपन्यासार्थं इति गाथार्थः ॥ १४३ ॥

निद्दाडुगे छप्पण्णा छव्वीसा णामतीस विरमंमि । हासरइ भयकुच्छा विरमे बावीस पुव्वंमि ॥ १४४ ॥

व्याख्या—असावष्टपञ्चाशन्निद्राप्रचलाभ्यां वर्जिता षट्पञ्चाशत् तस्मिन्नेवापूर्वकरणे भवति, असावपि नामत्रिंशत्प्रकृति-

1 दुःस्वरदुर्भगानादेयलक्षणम् ।

वर्जिता षड्विंशतिस्तस्मिन्नेव भवति। सुराहारकवैक्रियद्विकानि ६ ध्रुवबन्धित्रसादिका नव नव १८ पराघातोच्छ्वासचतुरस्रतीर्थंकरपञ्चेन्द्रियशुभविहायोगतय इति त्रिंशत्। हास्यरतिभयजुगुप्साविरमे तस्मिन्नेवापूर्वकरणे अतीते बादरकषायादौ द्वाविंशतिर्भवतीति गाथार्थः ॥ १४४ ॥

पुंवेय कोहमाइसु अबज्झमाणेसु पंचठाणाणि। बारे सुहुमे सत्तरस पगतिओ सायमियरेसु ॥ १४५ ॥

व्याख्या—तस्मिन्नेव बादरे पुरुषवेदस्याबन्धके एकविंशतिरेवं क्रोधस्याबन्धे विंशतिर्मानस्यैकोनविंशतिर्मायाया अष्टादश, लोभस्याबन्धके सप्तदश सूक्ष्मकषायादौ, ज्ञानावरणान्तरायदर्शनचतुष्कोच्चैर्गोत्रयशःकीर्तिरिति षोडशकाबन्धे उपशान्तक्षीणकषायसयोगिषु बन्धं प्रति सातमेव भवतीति गाथार्थः ॥ १४५ ॥

गुणगतिसम्बन्धतो बन्धसङ्ख्यामाह—

मिच्छो नरएसु सयं छण्णवई सासणो सयरि मीसो। बावत्तरिं तु सम्मो चउराइसु बंधति अतित्था॥१४६॥

व्याख्या—मिथ्यादृष्टिर्नरके—नरकगतौ प्रकृतिशतं बध्नाति, "[1]घेउव्वाहारदुग" मित्यादिगाथोक्तैकोनविंशतिप्रकृतीः गत्यनुभावेनैव नारका (न) बध्नन्तीति। विंशतितमं तीर्थङ्करनामगुणप्रत्ययान्न बध्नन्त्येवं शेषं शतं भवति। १००। सास्वादनाः प्रकृतीनां षण्णवतिं बध्नन्ति, नरकस्थो मिथ्यात्वनपुंसकहुण्डान्त्यसंहननपरित्यागात्सुज्ञाना। सम्यग्मिथ्यादृष्टिः प्रकृतीनां सप्ततिं बध्नाति, अतएव सास्वादनषण्णवतिर्दुःस्वरत्रिकस्त्यानर्द्धित्रिकतिर्यक्त्रिकमध्यमसंस्थानसंहननानन्तानुबन्धिचतुष्काप्रशस्ताविहा-

१ पञ्चमकारस्य गाथा १०

योगतिर्यग्वेदो[?]गोत्रनीचैर्गोत्रमनुष्यायुर्वर्जिता सप्ततिर्भवति। अविरतसम्यग्दृष्टिः प्रकृतीनां द्वासप्ततिं नरकस्थो बध्नाति पूर्वोक्ता सप्ततिर्मनुष्यायुर्गुशब्दाद् गुणप्रत्ययं तीर्थङ्करनाम च तच्च गुणप्रत्ययेनापि न चतुर्थनरकादिषु बध्यते भवप्रत्ययस्योत्कटत्वादिति गाथार्थः ॥ १४६ ॥

पूर्वोक्तापवादस्यापवादमाह—

मणुयदुगुच्चागोयं भवपच्चइयं न होइ चरिमाए। गुणपच्चइय तु बज्झइ मणुयाउ ण सव्वहा तत्थ ॥ १४७॥

व्याख्या—मनुष्यद्विक उच्चैर्गोत्रं न भवति बन्धं प्रति सप्तमनरकपृथिव्याम्, अतः पूर्वोक्ता सङ्ख्या अनेन प्रकृतित्रयेणोना मिथ्यादृष्टौ सासादने च। गुणप्रत्ययं त्वेतत्त्रिकं भवत्येव सम्यग्मिथ्यादृष्ट्यविरतयोः। मनुष्यायुष्कं तु पुनः सर्वथा तद्गुणप्रत्ययं भवतीति गाथार्थः ॥ १४७ ॥

देवगतौ ... —

... वरायवजुया सणंकुमारा ण बंधंति ॥ १४८ ॥

...[1]'वेउव्वाहारदुगं' इत्यादिना ता एव तीर्थ-

...डश यथा सर्वनारकास्तथा सन-

तिरितिगउज्जोयजुया आणयदेवा अणुत्तरसुरा उ। अणमिच्छणीयदुब्भगथीणतिगं अपुमथीवेयं ॥ १४९ ॥

व्याख्या—तिर्यक्त्रिकोद्योतयुक्ता सैवैकोनविंशतिस्त्रयोविंशतिर्भवति, तामानताद्या देवा न बध्नन्ति, गुणभव्यवास्ताः स्वबुद्ध्या नेतव्याः। अनुत्तराः पञ्चानुत्तरविमानवासिनो देवा तेऽनन्तानुबन्धिमिथ्यात्वनीचैर्गोत्रदुर्भगानादेयायशःस्त्यानर्द्धित्रिक-नपुंसकवेदस्त्रीवेदं तुशब्दाद्दुःस्वरं च पञ्चदश, उत्तरगाथया चान्या एकादशैवमेकोनपञ्चाशत्प्रकृतीर्न बध्नन्ति (४९) शेषामेकसप्तति बध्नन्ति, यतस्ते सर्वेऽपि सम्यग्दृष्टय इति गाथार्थः ॥ १४९ ॥

संघयणा संठाणा पण पण अपसत्थविहगइ न तेसिं। पज्जत्ता बंधंति उ देवाउमसंखवासाऊ ॥१५०॥

व्याख्या—संहननानि संस्थानानि चाद्यवर्जितान्यशुभविहायोगतिश्च न तेषां पञ्चानुत्तरनिवासिनां बन्धं प्रति भवन्ति एतदाख्यातमेव। तिर्यग्गतिविशेषणाद पर्याप्ता असङ्ख्येयवर्षायुषस्तिर्यञ्चो देवायुषं बध्नन्त्येव, एतच्च गाथार्द्धमुत्तरगाथाया-मुपरन सम्बध्यत इति गाथार्थः ॥ १५० ॥

तित्थाययउज्जोयं नारयतिरिविगलतिगतिगेगेंदी। आहारथावरचऊ आऊणा संखपज्जत्ता ॥ १५१ ॥

व्याख्या—तिर्यक्त्रातपोद्योतनामनारकतिर्यक्त्रिकं विकलेन्द्रियत्रिकं एकेन्द्रियजातिराहारकद्विकं स्थावरादिचतुष्कं मनुष्य-देवायुषी नरास्तिर्यञ्चोऽपर्याप्ता असङ्ख्येयवर्षायुष एवमेकत्रिंशतीनां प्रकृतीनामबन्धका इत्युत्तरगाथायां क्रियेति गाथार्थः ॥१५१॥

पज्जत्तिगया दुभगतिगगोयमपसत्थविहनपुंसाणं। संघयणउरलमणुदुगपणसंठाणाण अबंधा ॥ १५२ ॥

व्याख्या—अत एव पर्याप्ता दुर्भगादित्रिकनीचैर्गोत्राप्रशस्तविहायोगतिनपुंसकवेदानां संहननपञ्चकौदारिकद्विकमनुष्यद्विक-

योगतिस्त्रीवेदोद्योतनीचैर्गोत्रमनुष्यायुर्वर्जिता सप्ततिर्भवति। अविरतसम्यग्दृष्टिः प्रकृतीनां द्वासप्ततिं नरकस्थो बध्नाति पूर्वोक्ता सप्ततिर्मनुष्यायुःशब्दाद् गुणप्रत्ययं तीर्थङ्करनाम च तच्च गुणप्रत्ययेनापि न चतुर्थनरकादिषु बध्यते भवप्रत्ययस्योत्कटत्वादिति गाथार्थः ॥ १४६ ॥

पूर्वोक्तापवादस्यापवादमाह—

मणुयदुगुच्चागोयं भवपच्चइयं न होइ चरिमाए। गुणपच्चइयं तु बज्झइ मणुयाउ ण सव्वहा तत्थ ॥ १४७॥

व्याख्या—मनुष्यद्विकमुच्चैर्गोत्रं न भवति बन्धं प्रति सप्तमनरकपृथिव्याम्, अतः पूर्वोक्ता सङ्ख्या अनेन प्रकृतित्रयेणोना मिथ्यादृष्टौ सास्वादने च। गुणप्रत्ययं त्वेतत्त्रिकं भवत्येव सम्यग्मिथ्यादृष्ट्यविरतयोः। मनुष्यायुष्कं तु पुनः सर्वथा तद्गुणप्रत्ययं भवतीति गाथार्थः ॥ १४७ ॥

देवगतौ विशेषमाह—

सामण्णसुराजोगा आजोइसिया ण बंधहि सतित्था। इगिथावरायवजुया सणंकुमारा ण बंधंति ॥ १४८ ॥

व्याख्या—सामान्येन या देवानामयोग्या बन्धं प्रति प्रागभिहितास्ताः षोडश[1] 'वेउव्वाहारदुगं' इत्यादिना ता एव तीर्थङ्करसहिताः सप्तदश भवनपतिव्यन्तरज्योतिष्का न बध्नन्ति एकेन्द्रियस्थावरातपयुक्ता एव षोडश यथा सर्वनारकास्तथा सनत्कुमाराद्या नैकोनविंशतिप्रकृतीः बध्नन्ति इति गाथार्थः ॥ १४८ ॥

१ प्रथमद्वारगाथा ३० ।

तिरितिगउज्जोवजुया आणयदेवा अणुत्तरसुरा उ । अणमिच्छणीयदुभगथीणतिगं अपुमथीवेयं ॥ १४९ ॥

व्याख्या—तिर्यक्त्रिकोद्योतयुक्ता सैकोनविंशतिरुपोविंशतिर्भवति, तामानताद्या देवा न बध्नन्ति, गुणप्रत्ययास्ताः स्वबुद्ध्या नेतव्याः। अनुत्तराः पञ्चानुत्तरविमानवासिनो देवा तेऽनन्तानुबन्धिमिथ्यात्वनीचैर्गोत्रदुर्भगानादेयायशःस्त्यानर्द्धित्रिकनपुंसकवेदस्त्रीवेदं तुशब्दाद् दुःस्वरं च पञ्चदश, उत्तरगाथया चान्या एकादशैवमेकोनपञ्चाशत्प्रकृतीर्न बध्नन्ति (४९) शेषामेकसप्तति बध्नन्ति, यतस्ते सर्वेऽपि सम्यग्दृष्टय इति गाथार्थः ॥ १४९ ॥

संघयणा संठाणा पण पण अपसत्थविहगइ न तेसिं । पज्जत्ता बंधंति उ देवाउमसंखवासाऊ ॥१५०॥

व्याख्या—संहननानि संस्थानानि चाद्यवर्जितान्यशुभविहायोगतिश्च न तेषां पञ्चानुत्तरनिवासिनां बन्धं प्रति भवन्ति पञ्चदशान्यतत्त्वेव । तिर्यग्विशेषणार्थः पर्याप्ता असङ्ख्येयवर्षायुषस्तिर्यञ्चो देवायुर्बध्नन्त्येव, एतच्च गाथार्द्धमुत्तरगाथयामुचरत्र सम्बन्धनीयमिति गाथार्थः ॥ १५० ॥

तित्थायवउज्जोयं नारयतिरिविगलतिगतिगेगिंदी । आहारथावरचऊ आऊणा संखपज्जत्ता ॥ १५१ ॥

व्याख्या—तीर्थकरातपोद्योतनामनारकत्रिकतिर्यक्त्रिकविकलेन्द्रियत्रिकं एकेन्द्रियजातिराहारकद्विकं स्थावरादिचतुष्कं मनुष्यदेवायुषी नरायुर्वर्जं पर्याप्ता असङ्ख्येयवर्षायुष एवमेकत्रिंशतीनां प्रकृतीनामबन्धका इत्युत्तरगाथायां क्रियेति गाथार्थः ॥१५१॥

पज्जत्तिगा दुभगतिगणीयमपसत्थविहगनपुंसाणं । संघयणउरलमणुदुगपणसंठाणाण अबंधा ॥ १५२ ॥

व्याख्या—ता एव पर्याप्ता दुर्भगादित्रिकनीचैर्गोत्राप्रशस्तविहायोगतिनपुंसकवेदानां संहननपञ्चकौदारिकद्विकमनुष्यद्विक-

पञ्चसंस्थानप्रकृतीनामबन्धकास्ताभिः युक्तानां प्राक्तनानामपि, एवं द्विचत्वारिंशतो देवायुषं प्राग्गाथार्द्धप्रतिपादितं पञ्चैता ब-ध्नन्ति, नैकचत्वारिंशदिति गाथार्थः ॥ १५२ ॥

**किण्हाइतिगे असंजमे य वेउव्विजुगे न आहारं । बंधइ न उरलमीसे नरयतिगं छट्ठमयराउं ॥ १५३ ॥**

व्याख्या—कृष्णादिलेश्यात्रिकोदये असंयमोदये च वैक्रियपुग्मे इति वैक्रियशरीरे वैक्रियमिश्रे च नाहारकद्विकं जीवो ब-ध्नाति । न चौदारिकमिश्रयोगे सति नरकत्रिकं देवायुषं च बध्नाति । तदितरायुषोऽप्रतिषेधाद्बन्धो भवतीति गाथार्थः ॥१५३॥

**कम्मगजोगि अणाहारगो य सहिया दुगाउ णेयाओ । सगवण्णा तेवट्ठी बंधति आहारमएसुं ॥ १५४ ॥**

व्याख्या—कार्मणयोगी जीवोऽनाहारकश्च मनुष्यतिर्यगायुःसहिताः पूर्वोक्ताः षट् प्रकृतीर्न बध्नाति, त्रिषष्टिमाहारक-मिश्रयोगे बध्नाति, सप्तपञ्चाशदाहारकयोगे बध्नाति । या च न बध्नाति ता उच्यन्ते—द्वादशाद्याः कषाया मिथ्यात्वं तिर्यग्मनुष्य-दुःस्वरस्त्यानर्द्धिविकलेन्द्रियसूक्ष्मनरकत्रिकाणि संहननपञ्चकं संस्थानपञ्चकं औदारिकाहारकद्विकं स्थावरैकेन्द्रियातपस्त्रीनपुंसको-द्योतनीचैर्गोत्राऽशुभविहायोगतयः शेषास्त्रिषष्टिस्तां प्रमत्त आहारकमिश्रे च बध्नाति । ६३ । अस्थिरोऽशुभायशोऽरतिशोकासात-वर्जिता त्रिषष्टिः सप्तपञ्चाशद् भवति तां प्रमत्तोऽप्रमत्तो वा आहारकशरीरी तदनुभावादेव बध्नाति, न शेषां त्रिषष्टिमिति गाथार्थः ॥ १५४ ॥

**तेऊलेसाईया बंधंति न निरयविगलसुहुमतिगं । सेगिंदिथावरायवतिरियतिगुज्जोय नव बारं ॥ १५५ ॥**

व्याख्या—तेजोमया लेश्या तेजोलेश्या तस्या आदिः प्रथमो विभागः तमतीता द्वितीयविभागावस्थिता जीवाः नरकत्रिकं

छन्दोलक्षणमिश्रानाद्विरुद्धं यदकारि च। मयाऽज्ञत्वदोषेण तत्क्षमन्तु मनीषिणः ॥ ६ ॥
यदक्षरपरिभ्रष्टं मात्राबिन्दुविवर्जितम्। साग्रं वा तत्क्षमन्त्वत्र स्थिरं स्यात्कस्य मानसम् ? ॥ ७ ॥
सद्गतिपथपद्मदनं मिथ्यात्वतमोविनाशदिननाथम्। प्रकटितसकलपदार्थं जैनं वरशासनं जयति ॥ ८ ॥

इति श्रीपञ्चसंग्रह मूलवृत्ति समाप्ता.